# ॥ श्रीअन्नपूर्णास्तोत्रम् अपरनाम अन्नपूर्णाष्टकम् ॥

नित्यानन्दकरी वराभयकरी सौन्दर्यरत्नाकरी
निर्धूताखिलघोरपावनकरी प्रत्यक्षमाहेश्वरी । var घोरपापनिकरी
प्रालेयाचलवंशपावनकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी माताऽन्नपूर्णेश्वरी ॥ १॥

नानारत्नविचित्रभूषणकरी हेमाम्बराडम्बरी
मुक्ताहारविलम्बमान विलसत् वक्षोजकुम्भान्तरी ।
काश्मीरागरुवासिता रुचिकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी माताऽन्नपूर्णेश्वरी ॥ २॥

योगानन्दकरी रिपुक्षयकरी धर्मार्थनिष्ठाकरी
चन्द्रार्कानलभासमानलहरी त्रैलोक्यरक्षाकरी ।
सर्वैश्वर्यसमस्तवाञ्छितकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी माताऽन्नपूर्णेश्वरी ॥ ३॥

कैलासाचलकन्दरालयकरी गौरी उमा शङ्करी
कौमारी निगमार्थगोचरकरी ओङ्कारबीजाक्षरी ।
मोक्षद्वारकपाटपाटनकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी माताऽन्नपूर्णेश्वरी ॥ ४॥

दृश्यादृश्य विभूतिवाहनकरी ब्रह्माण्डभाण्डोदरी
लीलानाटकसूत्रभेदनकरी विज्ञानदीपाङ्कुरी ।
श्रीविश्वेशमनः प्रसादनकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी माताऽन्नपूर्णेश्वरी ॥ ५॥

उर्वी सर्वजनेश्वरी भगवती माताऽन्नपूर्णेश्वरी
वेणीनीलसमानकुन्तलधरी नित्यान्नदानेश्वरी ।
सर्वानन्दकरी सदाशुभकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी माताऽन्नपूर्णेश्वरी ॥ ६॥

आदिक्षान्तसमस्तवर्णनकरी शम्भोस्त्रिभावाकरी
काश्मीरा त्रिजलेश्वरी त्रिलहरी नित्याङ्कुरा शर्वरी ।
कामाकाङ्क्षकरी जनोदयकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी माताऽन्नपूर्णेश्वरी ॥ ७॥

देवी सर्वविचित्ररत्नरचिता दाक्षायणी सुन्दरी
वामे स्वादुपयोधरा प्रियकरी सौभाग्य माहेश्वरी ।

भक्ताभीष्टकरी सदाशुभकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी माताऽन्नपूर्णेश्वरी ॥ ८॥

चन्द्रार्कानलकोटिकोटिसदृशा चन्द्रांशुबिम्बाधरी
चन्द्रार्काग्निसमानकुण्डलधरी चन्द्रार्कवर्णेश्वरी ।
मालापुस्तकपाशसाङ्कुशधरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी माताऽन्नपूर्णेश्वरी ॥ ९॥

क्षत्रत्राणकरी महाऽभयकरी माता कृपासागरी
साक्षान्मोक्षकरी सदा शिवकरी विश्वेश्वरी श्रीधरी ।
दक्षाक्रन्दकरी निरामयकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी माताऽन्नपूर्णेश्वरी ॥ १०॥

अन्नपूर्णे सदापूर्णे शङ्करप्राणवल्लभे ।
ज्ञानवैराग्यसिद्ध्यर्थं भिक्षां देहि च पार्वति ॥ ११॥

माता मे पार्वती देवी पिता देवो महेश्वरः ।
बान्धवाः शिवभक्ताश्च स्वदेशो भुवनत्रयम् ॥ १२॥

॥ इति श्रीशङ्करभगवतः कृतौ अन्नपूर्णास्तोत्रं सम्पूर्णम् ॥

॥ अन्नपूर्णास्तोत्रम् २ ॥

श्रीब्रह्मभैरव उवाच -
साधनानि च सर्वाणि श्रुतानि तव सुव्रत ।
इदानीं वद देवेश स्तोत्राणि कवचानि च ॥ १॥

श्रीशिव उवाच -
कथयामि तव स्नेहात् स्तोत्राणि कवचानि च ।
अन्नपूर्णाप्रीतिदानि सावधानोऽवधारय ॥ २॥

ह्रींकारं प्रथमं नमो भगवति स्वाहावसानां ध्रुवं
मन्त्रं सप्तदशाक्षरं जपति ते माहेश्वरि प्रोक्षितम् ।
ध्यायेऽम्बे तरुणारुणं तव वपुर्नित्यान्नपूर्णे शिवे
गेहे तस्य विराजते सरभसं दिव्यान्नराशिर्ध्रुवम् ॥ ३॥

ह्रींकारमुर्तिं कमनीयवक्त्रां चन्द्राङ्करेखान्वितभालभागाम् ।
ईशान्कान्तां प्रणमामि नित्यां लक्ष्मीविलासास्पदपादपीठाम् ॥ ४॥

नमोऽस्तु तुभ्यं गिरिराजकन्ये नमोऽस्तु कामान्तकवल्लभायै ।
नमोऽस्तु पङ्के रुहलोचनायै नमः शिवायै शशिभूषणायै ॥ ५॥

वामे करेऽमृतमयं कलशञ्च दक्षे
स्वर्णाङ्कितां ननु पल्लान्नमयीञ्च दर्वीम् ।
चित्रां सुवर्णवसनां गिरिशस्य कान्तां
सत्पद्मपत्रनयनां मनसाहमीडे ॥ ६॥

वामे माणिक्यपात्रं मधुरसभरितं बिभ्रतीं पाणिपद्मे
दिव्यैरत्नैः प्रपूर्णां मणिमयवलये दक्षिणे रत्नदर्वीम् ।
रक्ताङ्गी पीनतुङ्गस्तनभरविलसंस्तारहारां त्रिनेत्रां
वन्दे पूर्णेन्दुबिम्बप्रतिनिधिवदनामम्बिकामन्नपूर्णाम् ॥ ७॥

भगवति भवरोगात् पीडितं दुष्कृतोत्थात्
सुतदुहितृकलत्रोपद्रवेणानुजातम् ।
विलसदमृतदृष्ट्या वीक्ष्य विभ्रान्तचित्तम्
सकलभुवनमातस्त्राहि मामन्नपूर्णे ॥ ८॥

माहेश्वरीमाश्रितकल्पवल्लीमहं भवच्छेदकरीं भवानीम् ।
क्षुधार्तजायातनयाभ्युपेतस्त्वामन्नपूर्णां शरणं प्रपद्ये ॥ ९॥

दारिद्र्यदावानलदह्यमानं नमोऽन्नपूर्णे गिरिराजकन्ये ।
कृपाम्बुवर्षैरभिषिञ्च त्वं मां त्वत्पादपद्मार्पितचित्तवृत्तिम् ॥ १०॥

इत्यन्नपूर्णास्तवरत्नमेतच्छ्लोकाष्टकं यः पठतीह भक्त्या ।
तस्मै ददात्यन्नसमृद्धिराशिं श्रियञ्च विद्याञ्च परत्र मुक्तिम् ॥ ११॥

इत्यन्नदाकल्पे षोडशपटले अन्नपूर्णास्तोत्रं समाप्तम् ।